# व्यालि शिक्षा

व्यालिशिक्षाप्रारंभः

व्यालिशिक्षां प्रवक्ष्यामि ब्रह्मणानुमतः पुरा
सहस्त्रवदनेनाहं सूत्रेण च समन्वितम् १
तत्र पूर्वं घनस्यैव प्रमाणं लक्षणं तथा
घनस्य च विधिं तत्र घनसन्धिं तथैव च २
एवमादि च यत्सर्वं तत्सर्वं वच्मि साम्प्रतम्
घने द्वादश सन्धिस्स्यात् त्रयोदशपदं वदेत् ३
त्रिक्रमे सप्तदशधा संधिरेवं विधीयते
वदेदष्टादशपदं तत्रैव च विधीयते ४
यथास्वरं यथान्यायं यथावच्च सलक्षणम
य उच्चरेद्धनं सोपि तद्ब्रह्मत्वमवाप्नुयात ५
जटावत्संधितः पूर्वं षडावृत्तिः पदद्वयम
अनन्तरं चैकपदं द्विरावृत्तिर्भवेत्पुनः ६
विलोमे मध्यमपदमेकवारं हि केवलम्
तत्पूर्वं द्विविधं कृत्वा चानुलोमे यथाक्रमम् ७
पुनश्च मध्यमपदमारब्धव्यमनन्तरम्
पूर्ववत्सन्धितः कुर्याद्धन एवं विधीयते ८

इति व्यालिशिक्षा समाप्ता

Reference:
Manuscript No. 998 in *Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library* (Madras) Vol. I: Vedic/ by K. Madhava Krishna Sarma, 1942, 415 pp. (Mss. 1-1103). [Complete text is in the catalogue.]